tion and privilege at the hands of his Guru it is not conceivable how he put up with his bereavement. Certainly His guru alone must have given him the requisite strength of mind to bear up the irreparable loss. The wonderful manner in which he had the good fortune to be blessed by the Goddess Sarada as detailed in the Sri Saradanugrahaprakaranivedanam (pp. 67-68) must also have cheered him up a great deal.

Even while I had the privilege of hearing several of these slokas read out to me by His Holiness himself I expressed to him my desire to bring them out in a collected form and subsequent to his disappearance, I have been able to persuade my esteemed friend—the author, to complete them and to allow me to publish them to the world as an instance of what the wonderful blessings of our divine Guru could accomplish—an instance which, I am sure, would greatly tend to infuse Bhakti into the minds of the readers towards the illustrious World-Teacher.

*J. K. Balasubrahmanyam.*

## ॥ विषयाः ॥











# ॥ गुरुसुवर्णमालास्तोत्रम् ॥



स जयति विद्वत्प्रवरः

सकलजगद्वन्द्यमानपदयुगलः ।

सद्विद्यादृतचित्तः

संयमिराजः सतां मुदे सततम् ॥ १ ॥

चिदचिद्विभागदक्ष-

श्चित्तसरोजात्तचन्द्रमौलीशः ।

चिरतरतपसा लभ्य-

श्चिरजीवित्वं तनोतु गुरुराजः ॥ २ ॥

दानजितकल्पवृक्षो
दाक्षिण्यदयादिसुगुणजनिभूमिः ।
दाता सकलसुखानां
दान्तिं मे दिशतु देशिकेन्द्रोऽसौ ॥ ३ ॥

नन्दितविबुधसमाजो
नम्रजनाभीष्टदानसुरधेनुः ।
नम्रीकृतधरणीशो
नन्दयतु प्रणतमाशु बोधेन ॥ ४ ॥

दलितद्वैतभ्रान्ति-
र्दक्षसुतापादपङ्कजभ्रमरः ।
दरहासजितसुधांशु-
र्दक्षं प्रकरोतु बालिशं काव्ये ॥ ५ ॥

शिशुमत्ततुल्यचरितः
शिशुपशुविद्वच्छ्वपाकसमदृष्टिः ।
शिशिरतरहृदयपद्मः
शिवंकरोऽस्त्वनिशमस्य परहंसः ॥ ६ ॥

वाणीनवावतारो
वाचामरराजदेशिकविजेता ।
वारितसंसृतितापो
वाचामृतसेचनेन मां पायात् ॥ ७ ॥

भिषजं चित्तगदानां
भिदुरं दुर्वादिपर्वतेन्द्राणाम् ।
भित्तिं सकलकलानां
भिन्नाविद्यं यमीन्द्रमुपसेवे ॥ ८ ॥

नयनजितपुण्डरीकं
नलिनीपत्रस्थसलिलसमलेपम् ।
नदपतिनिभगाम्भीर्यं
नरलोकगुरुं नमामि मुक्त्यर्थम् ॥ ९ ॥

वनवाससक्तमनसं
वनितावैतृष्ण्यसूतिकागारम् ।
वसनाशनेष्वसक्तं
वरये वैराग्यदायिनं यमिनम् ॥ १० ॥

नृहरिं मुदा भजन्तं
नृत्यन्तं वेदशीर्षरङ्गतले ।
नृपमौलिचुम्बिताङ्घ्रिं
नृत्वविमुक्त्यै नमामि साष्टाङ्गम् ॥ ११ ॥

सिन्दूरारुणवसनं
सिन्धुं क्षान्त्यादिसुगुणरत्नानाम् ।
सिंहनिभकायपुष्टिं
सिन्धुं तर्तुं भवाख्यमहमीडे ॥ १२ ॥

हरताच्चित्ततमिस्रं
हरिहरपदपूजनात्तवैदुष्यः ।
हस्तधृतवेणुदण्डो
हरिरूपोऽसावहर्निशं यमिराट् ॥ १३ ॥

भारत्याः सुतसंप-
न्नाग्यं चाद्रितिलोकसद्वस्य ।
भापासु प्रतिभां मे
भावितत्त्वो ददातु यतिवर्यः ॥ १४ ॥

रदनच्छदजितबिम्बो
रदनपराभूतकुन्दविस्रम्भः ।
रमणीयगुणनिवेशो
रक्षतु बालं रजःपरामृष्टम् ॥ १५ ॥

तीर्त्वा संसृतिजलधिं
तीर्णानन्यान्करोति वचसा यः ।
तीरातिगप्रभाव-
स्तीव्रं तापं धुनोतु नम्रस्य ॥ १६ ॥

जगतां देशिकवर्यो
जनताया हृदयपङ्कजविकासी ।
जनिमृतिजराविमुक्तो
जयति व्याख्यानभद्रपीठेऽद्य ॥ १७ ॥

यमनियमयोगयुक्तं
यत्याश्रमपालने सदा सक्तम् ।
यः स्तौति भक्तियुक्तो
यमपाशभयाद्विमुच्यते सोऽयम् ॥ १८ ॥

तिष्ठन्नात्मनि नित्यं
तिमिरं नम्रालिहृद्गतं योऽसौ ।
तिग्मांशुवत्प्रमार्जे-
त्तिरयतु जाड्यं ममापि नम्रस्य ॥ १९ ॥

गुरुनामघटितवर्णा-
न्पादस्यादौ क्रमेण संयोज्य ।
ग्रथितेयं स्तुतिमाला
देशिकगुणगुम्भिता जयति ॥ २० ॥

इति गुरुसुवर्णमालास्तोत्रं संपूर्णम् ॥



॥ ॐ ॥

# ॥ आचार्यषट्पदी ॥



चन्द्रचूडपदपूजनसक्ता-
श्चन्द्रबिम्बतुलिताननपद्मान् ।
चन्दनार्द्रहृदयानभिरामा-
न्भावये हृदि सदा गुरुवर्यान् ॥ १ ॥

मन्दहासपरितोषितभक्ता-
न्मन्दधीजनगतार्तिनिहन्तॄन् ।
मन्दतातसदृशद्युतिपुञ्जा-
न्भावये हृदि सदा गुरुवर्यान् ॥ २ ॥

न्यायनीरनिधिपूर्णमृगाङ्का-
न्पुत्रदारममतावनदावान् ।
कामलोभमदसर्पखगेशा-
न्भावये हृदि सदा गुरुवर्यान् ॥ ३ ॥

भक्तलोकपरिपालनसक्ता-
न्भक्तिमार्गनिरतान्बुधवन्द्यान् ।
भुक्तिमुक्तिवरदानधुरीणा-
न्भावये हृदि सदा गुरुवर्यान् ॥ ४ ॥

शान्तिदान्तिमुखषट्कनिवेशा-
न्वेदशीर्षसरसीगतहंसान् ।
स्वीयदेशिकपदाब्जमिलिन्दा-
न्भावये हृदि सदा गुरुवर्यान् ॥ ५ ॥

शुक्तिरूप्यमिव भावयमाना-
न्दृश्यमात्मविनिवेशितचित्तान् ।
नीरजासनवधूपदभक्ता-
न्भावये हृदि सदा गुरुवर्यान् ॥ ६ ॥

इति आचार्यषट्पदी संपूर्णा ॥



॥ ॐ ॥

# ॥ गुरुवियोगविलापनस्तुतिः ॥



आबाल्यात्परिपोष्य सद्गुरुवर प्रीत्यान्यदुष्प्रापया
कृत्वा तोषभरस्य पात्रमनिशं खेदस्य न क्वापि माम्
त्वत्पादाब्जमरन्दतुन्दिलहृदं त्वज्जीवनाज्जीवितं
हित्वा कुत्र तिरोहितोऽसि भवतो विश्लेषणं दुःसहम् ॥

आबाल्यात्परिसेवनाद्दतमतेरत्यन्तबालस्य मे
दत्वा प्रीतिपुलोऽत्रकाशमतुलं सेवां मुदैवाग्रहीः ।
त्वत्सेवानिरतस्त्वदङ्घ्रिसरसीजातस्पृहः कस्य वा
सेवायां निरतो भवेयमधुना किं तेन मे स्याद्गुरो ॥

आबाल्याज्जननी यथा तनुभवं संलालयन्ती सदा
निद्राहारविहारसक्तहृदयं ज्ञात्वा स्वयं रक्षति ।
तद्वन्मां परिपाल्य देशिकवर प्रीत्या चिरादन्ततो
मातृत्यक्तशिशुं यथा त्वमकरोः कुत्रासि दृश्यो भव ॥

आबाल्याद्विरहावधि प्रतिदिनं भुक्त्वा सहैव त्वया
　पीत्वा श्रोत्रयुगेन वाङ्मयसुधां दिव्यं तथा ते वपुः ।
नेत्राभ्यां परिरभ्य मोदमभजं चान्यादृशं सद्गुरो
　किं स्यां तादृशतोषभाजनमहं जन्मान्तरे वा पुनः ॥

आबाल्यादसकृत्परीक्ष्य बहुधा मन्मानसं सद्गुरो
　सन्मार्गैकरतं सदाघनिकराद्दूरं च निश्चित्य माम् ।
संख्यादूरगतेषु जन्मसु कृतैः पुण्यैरगण्यैः परं
　लभ्यां चन्द्रकलाधरस्य महतीं पूजां वराकेऽत्यजः ॥

आबाल्यात्सविधे विधाय बहुधा संशोध्य मामन्वहं
　मन्त्रान्पश्चिमजन्मलोकसुगमान्स्वाचारसत्कर्मणि ।
बालं मामुपदिश्य सम्यगखिलं यत्नादनुष्ठाप्य त-
　द्योऽसौ धन्यतरं कृपापरवशान्निन्ये स कुत्राधुना ॥ ६ ॥

आबाल्यात्करुणार्णवेन भवता नीत्वा सहैवान्वहं
　मातुर्दर्शनमारचय्य करुणापात्रं च देव्यास्तथा ।
संप्रार्थ्य स्वयमम्बुजासनसखीं मच्छ्रेयसे भूयसे
　यस्त्वं मामकरोः प्रसादभवनं चाक्ष्णोः पुरस्ताद्भव ॥

आबाल्याच्चलिते त्वयि प्रचलितं तद्वत्स्थिते संस्थितं
यद्वा चासनमाश्रिते सति पुरो भक्त्योपविष्टं तथा ।
भुक्ते भोजनमाचरन्तमनिशं त्यक्त्वा गुरो तावक-
च्छायातुल्यमिमं गतोऽसि विरहक्लेशात्कथं चोद्धृतिः ॥

आबाल्यात्पितरौ तथा सहभुवावन्यांश्च बन्धूनहो
विस्मृत्य त्वमिति प्रपञ्चमखिलं मत्वा गुरो निर्भयम् ।
एतावन्तमतिप्रभूतसमयं नीत्वा कथं मामकं
शिष्टं कालमहं प्रकृष्टहृदयक्लेशो नये त्वां विना ॥ ९ ॥

आबाल्यात्कृतमन्तुजातमखिलं सोढ्वा गुरो जातुचि-
न्न प्रादर्शि मुखेऽथवा वचसि मे भावस्त्वदीयोऽन्यथा ।
कोऽन्यस्तादृगिहाप्यते हि पुरुषो लोके पुनस्त्वां विना
स्वातन्त्र्येण धृतात्मनो मम भवेत्प्राणस्य कस्माद्धृतिः ॥

आबाल्यात्परिभाव्य तेऽङ्घ्रियुगलं स्वामीति नान्यं जनं
स्वप्नेऽपि प्रतिकूलतामगणयन्वैधीं वृथाहंकृतः ।
किं कुर्यामहमद्य तेऽङ्घ्रियुगलाद्दूरोऽभवं मां वृथा
लोकाः सन्ततमाचरन्ति भवनं दुःखस्य का वा गतिः ॥

आबाल्यात्परिपाठ्य मामतिलघुग्रन्थांश्च काव्यादिका-
न्कृत्वा शब्दतदर्थबोधनचणं तर्के तथा कांश्चन ।
ग्रन्थाञ्श्रीमठकार्यभारवहने शक्तं विभाव्यादरा-
द्योऽसौ तत्र नियोज्य तोषमतुलं लेभे स कुत्राधुना ॥

आबाल्यादसकृत्परीक्ष्य बहुधा चित्ते स्वभावं मम
विद्याबुद्धिविवेकबृन्दसुलभे सांस्थानिके श्रीगुरो ।
कार्ये मां विनियोज्य भारमखिलं नैजं क्रमेणादरा-
द्विन्यस्याथ शिशौ निराकुलतया स्वात्माभिरामोऽभवः ॥

आबाल्यात्करणान्यहं बहुतरक्लेशान्निगृह्यात्मनि
लोकापवादपततेश्च भीतहृदयो नक्तंदिवं सद्गुरो ।
नैस्पृह्येन यथामति प्रतिपदं निर्वर्त्य कार्याण्यहो
निर्दिष्टान्यनयं त्वदीयकरुणापात्रं च मां यत्नतः ॥

आबाल्यादकृतप्रयासमपि मां ज्ञात्वा गुरो तत्त्वतः
काव्ये शब्दनयेऽथवा करुणया चोक्त्वा तुरीयं स्वयम् ।
पादं मामनुशास्य पूरणकृते श्लोकस्य पादैस्त्रिभिः
श्रुत्वा बालविजल्पनं त्वमभजस्तोषं नितान्तं खलु ॥

आबाल्यादनुवर्द्धमानसगतप्रेमातिरेकाद्गुरो
चान्विष्यन्निह मामिकां प्रतिकलं लोकप्रवृत्तिं भिया ।
किं स्याच्छत्रुहृतः किमम्बुपतितः किं वा शरीरे व्यथा
कस्मान्नागत इत्ययं मम सदा मार्गं प्रतीक्ष्य स्थितः ॥

आबाल्यात्सहनं न तु क्षणमपि स्यादद्य सह्यः कथं
विश्लेषस्तव नोत्सहे नय गुरो त्वत्संनिधिं सत्वरम् ।
किं वा प्रापय मां यदन्तरहितं सच्चित्सुखाद्यात्मकं
दुःखाद्यैरनपाश्रितं निजपदं यस्मान्न भूयो भवः ॥१७॥

आबाल्यात्प्रवदंस्थितोऽसि गुरुराडावां नरौ प्राकृतौ
कस्मैचिन्महते प्रयोजनकृते श्रीकृष्णपार्थाविव ।
संजातौ न तथा भवेद्यदि पुनः स्यान्नावयोरीदृशी
प्रीतिश्चेति तदद्य निश्चितमभूद्यस्माज्जडस्त्वां विना ॥

आबाल्यात्प्रवदंस्थितः खलु गुरो यावन्मठे मत्स्थिति-
स्तावत्त्वं मठकार्यजातमचलः कुर्वन्वसेहार्भक ।
यद्यस्माज्जगतो विरज्य लयगः स्वात्मन्यहं स्यां तदा
त्वं चाप्यङ्ग यथेष्टगो भव न मे चिन्तेति तत्किं प्रमा ॥

तच्चेदत्र तवाङ्घ्रिपद्मरहिते कस्मान्मठे मत्स्थितिः
किं बध्नाति गुरो यथेष्टगमने मामद्य कुत्रापि वा ।
त्वं न स्याः न च मे मनो न हि जनास्तद्बीजमप्यन्ततः
प्रारब्धं किल तत्प्रशाम्य तरसा स्वातन्त्र्यमापादय ॥

आबाल्यादनधीतलोकविषयोऽप्यार्याङ्घ्रिसंसेवन-
प्राप्तोत्साहविवेकधैर्यसुबलो निर्वाह्य यत्नाच्चिरम् ।
कार्याण्यार्यनिदेशतः प्रगलितस्वात्माक्षजातस्त्वहं
धैर्योत्साहविवेकबुद्धिविकलो नेच्छामि वोढुं पुनः ॥२१॥

कृष्णस्त्वं न भवेर्यदि प्रतिकलं प्रत्याशमेवं जनं
प्रत्येकं प्रतिपद्य पुष्यति कलौ नास्तिक्यवादैर्भृशम् ।
प्रस्थाय स्वयमेव शृङ्गनगराज्जेतुं कलिं वाङ्मयै-
र्बद्ध्वा युक्तिगुणैर्विधाय वशगं धर्मं स्वरक्षः कथम् ॥

यद्वद्राक्षसपुंगवैरपहृतां भूमिं वराहात्मना
जन्म प्राप्य रमाधवः प्रतिभटानुन्मथ्य तामाहरत् ।
तद्वच्छंकरजन्मभूमिमभितः क्रव्यादतुल्यैर्जनै-
राक्रान्तां त्वमपालयः किमु न तत्कृष्णांशचिह्नं तव ॥

त्वं कृष्णो न भवेः कथं प्रतिदिशं चाबालवृद्धं जनाः
प्रत्येकं प्रवदेयुरस्ति महती प्रीतिर्गुरूणामिह ।
मय्येवेति तथा प्रतीतिविषयः स्यात्प्राकृतोऽन्यो जन-
स्तस्मादव्यभिचारि तत्त्वयि गुरो कृष्णांशभाक्त्वं स्फुटम् ॥

विपश्चिद्वालो वा नृपतिरधनो वा सुहृदुत
श्वपाकः शत्रुर्वा भवतु समबुद्धिर्नतजने ।
यदासीत्तत्किं ते न हि वदति कृष्णांशजननं
गुरो मर्त्यः को वा जगति समताबुद्धिमकरोत् ॥ २५ ॥

प्राप्तव्यं न हि किंचिदत्र गुरुराडासीत्तथापि त्वया
लोकानुग्रहतत्परेण विधिवत्कर्म प्रतिष्ठापितम् ।
तीर्णोऽपि स्वयमुद्दिधीर्षुरपराञ्ज्ञानप्रदानेन
यो यत्नस्त्वाचरितः स एव समभूत्कृष्णत्वचिह्नं तव ॥

वक्तुं लोकगुरोर्गुणान्कथमहं शक्तो भवेयं जडः
सत्यं वच्मि न तत्र चोद्यममहं यत्नादकार्षं वृथा ।
किं त्वाश्वासकृते तदीयविरहक्लेशासहिष्णुर्भृशं
चापाल्यादनुभूततद्गुणलवान्स्मृत्वाब्रवं कांश्चन ॥ २७ ॥

गुरुवियोगविलापनस्तुतिः संपूर्णा ॥

॥ ॐ ॥

# ॥ ललितापञ्चदशी ॥



कलयाम्यन्तर्मातरमनिशं
कनकाद्रिधन्विनो महिषीम् ।
कलयतु कवीन्द्रमचिरा-
त्कामाक्षी मूकवन्मां च ॥ १ ॥

एणी जिता ययाक्ष्णोर्वै-
पुल्यात्केशसंहतेश्चमरी ।
सिंही ययावलग्ना-
ल्ललिता सास्त्वस्मदीयभव्याय ॥ २ ॥

ईशां समस्तजगतां
ईक्षणमात्रेण मुक्तिदां नृणाम् ।
ईहाविरहितचेता
ईडे भवभीतिनाशिनीं ललिताम् ॥ ३ ॥

ललनां मन्मथशत्रो-
स्तुलनाहीनां नतालिवाग्दाने ।
दलनाय जाड्यराशे-
र्मलनाशकरीं सदा सेवे ॥ ४ ॥

ह्रींकारपद्मभृङ्गी
साकारा हृत्सरोजमाविशतात् ।
स्वीकुर्याज्जगदम्बा
सत्कारं मामकीनमतिकृपया ॥ ५ ॥

हस्तजितरक्तपद्मा
हरिहरमुख्येड्यदिव्यचारित्रा ।
हरिणाङ्कशकलचूडा
हरतान्मच्चित्ततिमिरमतिशीघ्रम् ॥ ६ ॥

सच्चित्सुखस्वरूपा
सङ्गविहीनाऽमनस्कहृल्लभ्या ।
संध्यारुणाभवसना
संतापं हरतु चित्तगं देवी ॥ ७ ॥

कनकं यत्पदसक्ताः
कलयन्ते लोष्टवच्चित्ते ।
करिमुखषण्मुखसेव्या
कलयतु सौख्यं कपर्दिनो जाया ॥ ८ ॥

हस्तीन्द्राननमाता
हस्तीन्द्राध्येयगमनचातुर्या ।
हस्तित्वक्प्रियकान्ता
हस्तं मे दिशतु तारणायाशु ॥ ९ ॥

ललितैः पद्यकदम्बै-
र्ललितां स्तोतुं प्रवर्तते योऽसौ ।
ललिता तस्मै दद्या-
ल्ललितां वाचं निरर्गलां स्तोतुम् ॥ १० ॥

ह्रींकारस्तव नामे-
त्याहुर्यस्माच्चिरंतनी वाचः ।
तद्वर्ण एव रमतां
जिह्वाग्रे मामके मातः ॥ ११ ॥

सत्कीर्तिप्रतिभादी-
न्साद्वियां चापि सज्जनोपास्याम् ।
सरसिजभवमुखविनुते
सदये कामाक्षि सत्वरं देहि ॥ १२ ॥

कल्याणगुणगणानां
मूलं कन्दर्पपोषणे लोलम् ।
कविताप्रदानशीलं
कलये तेजः शिवाङ्ककृतखेलम् ॥ १३ ॥

लग्नं विषयविहारे
मग्नं संसारवारिधौ मातः ।
भग्नं कामगजेन्द्रै-
र्भुग्नं चित्तं ममास्तु तव चरणे ॥ १४ ॥

ह्रींकारस्त्रिषु कूटे-
ष्वन्ते चास्ते यदीयमन्त्रस्य ।
तन्मन्त्रजपपराणां
ह्रींकारार्थं ब्रवीति ललितान्ते ॥ १५ ॥

पञ्चदशीमनुघटितै-

वर्णैरारभ्य संस्तुता देवी ।

गुर्वाज्ञया मया त-

च्छ्रुत्वा तुष्टिं प्रयातु गुरुराण्मे ॥ १६ ॥

इति ललितापञ्चदशी संपूर्णा ॥






॥ ॐ ॥

# ॥ वाणीदशकम् ॥



राकाचन्द्रो यन्मुखकान्त्या बहुनिन्दा-
पात्रं जातो बिम्बफलं चाधरतो हि ।
यस्याः पादौ संसृतिसिन्धोस्तरणी तां
वाणीं वाचां मातरमीडे करुणाब्धिम् ॥ १ ॥

तुङ्गातीरे भाग्यविशेषान्मनुजानां
भूमौ नित्यं चक्रविशेषे निवसन्तीम् ।
लीलामात्रादादृतदेहां चिदभिन्नां
वाणीं वाचां मातरमीडे करुणाब्धिम् ॥ २ ॥

हस्तैर्मुद्रापुस्तकमालामृतकुम्भा-
स्तद्वच्छीर्षे चन्द्रकलां चापि दधानाम् ।
दीनानाथेष्वादृतरक्तिं जगदम्बां
वाणीं वाचां मातरमीडे करुणाब्धिम् ॥ ३ ॥

चित्ते नित्यं यत्पदपाथोरुहपूजां
कृत्वा लोको जन्मजरामृत्युविपत्तीः ।
तीर्त्वा विन्देन्निर्वृतिसौख्यं तरसा तां
वाणीं वाचां मातरमीडे करुणाब्धिम् ॥ ४ ॥

विद्यारूपां विष्णुविरिञ्चेशनियन्त्रीं
मूलाधारे मुद्रितबन्धैरनुचिन्त्याम् ।
मुक्ताहारैर्भूषितगात्रीं तनुमध्यां
वाणीं वाचां मातरमीडे करुणाब्धिम् ॥ ५ ॥

कुन्दस्मेरामम्बुजजातप्रियकान्तां
धृत्वा कुक्षौ विश्वमशेषं विलसन्तीम् ।
चिन्मात्रा अप्यानतगुप्त्यै धृतरूपां
वाणीं वाचां मातरमीडे करुणाब्धिम् ॥ ६ ॥

कम्बुग्रीवामम्बुजनेत्रां गजगन्त्री-
मिन्दुक्षीराहंकृतिमर्याम्बरवीताम् ।
अक्षद्युत्या धिक्कृतबालार्कसहस्रां
वाणीं वाचां मातरमीडे करुणाब्धिम् ॥ ७ ॥

कूर्मः पद्भ्यां लोचनकान्त्या मृगकान्ता
हस्तेनाब्जं मध्यतनिम्ना मृगराजः ।
यस्याः शश्वन्नैच्यमुपेयुर्वरदान्तां
वाणीं वाचां मातरमीडे करुणाब्धिम् ॥ ८ ॥

भक्त्या युक्तो भावविशुद्ध्या क्षणमात्रं
चित्ते ध्यानं यश्च निरीहः प्रकरोति ।
तस्मै दात्रीं स्वीयपदस्यापि तदैव
वाणीं वाचां मातरमीडे करुणाब्धिम् ॥ ९ ॥

मूको वाग्मी यत्पदनत्या क्षणमात्रा-
द्भूत्वा तद्वत्काव्यकृतौ स्याच्चतुरश्च ।
रङ्कोऽपि स्याच्छ्रीनिलयो यत्कृपया तां
वाणीं वाचां मातरमीडे करुणाब्धिम् ॥ १० ॥

प्रातःकाले भावविशुद्धिं विदधानो
भक्त्या नित्यं जल्पति वाणीदशकं यः ।
वाचां सिद्धिं संपदमुच्चैः परभक्तिं
तस्यावश्यं पद्मजजाया विदधाति ॥ ११ ॥

मूर्ध्ना धृत्वा देशिकदत्तां परमाज्ञां
किंचिज्ज्ञोऽहं देशिकतुष्ट्यै यतमानः ।
कृत्वा कंचिद्यत्नविशेषं मतितुल्यं
भक्त्याकार्षं पद्मजकान्तादशकं हि ॥ १२ ॥

इति श्रीवाणीदशकं संपूर्णम् ॥



॥ ॐ ॥

# ॥ श्रीशारदास्तोत्रम् ॥



शृङ्गक्ष्माधरमध्यभूप्रविलसच्छ्रीचक्रराजालये
मुद्रापुस्तकमालिकामृतघटप्रोद्यत्कराम्भोरुहे ।
क्षीराम्भोनिधिचन्द्रकम्बुसहभूः क्षौमाम्बरालंकृते
वाणि त्वच्चरणारविन्दयुगलं त्यक्त्वा न मेऽन्या गतिः ॥

भक्तोद्धारकृते कृतावतरणं भूमौ विना कारणं
कामक्रोधमदाहमादिकलुषत्यक्तास्महृत्पद्मगम् ।
नत्वा यत्प्रकरोति नम्रजनतालोकं गिरा गीष्पतिं
वाणि त्वच्चरणारविन्दयुगलं त्यक्त्वा न मेऽन्या गतिः ॥

पद्मारातिकलाविभूषितकचे पद्मोत्थमोदप्रदे
पद्माक्षादिसुरेन्द्रसंनुतपदे पद्माशिवासेविते ।
पद्मन्यर्बुदखर्वमुख्यगणनातीतार्कभातुल्यभे
वाणि त्वच्चरणारविन्दयुगलं त्यक्त्वा न मेऽन्या गतिः ॥

पुण्यं पापमजानतो भुवि वृथा जातस्य मूढात्मनो
निःशङ्कं परगेहिनीपरवसुप्रत्याशया धावतः ।
पूजास्नानजपक्रियाद्यभिनयैर्लोकभ्रमं कुर्वतो
वाणि त्वच्चरणारविन्दयुगलं त्यक्त्वा न मेऽन्या गतिः ॥

तुङ्गावारितटान्तभूतलभवं नित्यं प्रफुल्लं मुहुः
प्रीत्या दित्सदलं स्वभक्तमधुपव्रातस्य मोदामृतम् ।
पीत्वा यत्सहसा भवेन्नतजनो जन्माम्बुधेर्बाडवः
वाणि त्वच्चरणारविन्दयुगलं त्यक्त्वा न मेऽन्या गतिः ॥

यत्प्राप्त्यै विबुधा विरज्य विषयव्राताद्यतन्ते चिरं
यल्लाभान्न पुनर्भवेज्जनततिः पात्रं जनेरञ्जसा ।
यस्मादुद्भवनं समस्तजगतां यत्रैव संलीयते
वाणि त्वच्चरणारविन्दयुगलं त्यक्त्वा न मेऽन्या गतिः ॥

को वा पालयिता ममात्र शरणं किं वा भवाब्धौ मुहु-
र्मग्नस्येन्द्रियवश्यतां गमयतः स्वात्मानमुत्खिद्यतः ।
त्वत्सेवामविजानतस्त्वयि सकृच्चित्तं न वा कुर्वतो
वाणि त्वच्चरणारविन्दयुगलं त्यक्त्वा न मेऽन्या गतिः ॥

कुर्वे नाहमिहोदितं सकृदपि स्मार्तं न वा साधकं
श्रौतं स्वर्गसुखस्य कर्म सुकरं ज्ञानप्रसक्तिः क्व नु ।
कर्मज्ञानपथाद्विदूरगमनस्यात्यन्तदुर्मेधसो
वाणि त्वच्चरणारविन्दयुगलं त्यक्त्वा न मेऽन्या गतिः॥

त्वत्कारुण्यसुधानिधौ सति वृथा चाशातृडार्तोऽन्वहं
जन्मव्याधिजराविनाशकलुषं संसारकूपं श्रये ।
तच्छान्तिः किमु तेन देवि भवति भ्रान्तस्य निन्दास्पदौ
वाणि त्वच्चरणारविन्दयुगलं त्यक्त्वा न मेऽन्या गतिः॥

संसारार्णवमध्यमग्नजनतोद्धारैकबद्धव्रतं
भक्तौघाघमहान्धकारनिवहप्रोन्माथिपद्मप्रियम् ।
नित्यानन्दरसानुभूतिविमलस्वान्तार्यसंसेवितं
वाणि त्वच्चरणारविन्दयुगलं त्यक्त्वा न मेऽन्या गतिः॥

नाहं वाक्यपदादितन्त्रकुशलो न ह्यस्मि लोकार्थवि-
त्र स्वामी धनधान्ययोः पुनरहं निर्वेदपात्रं न च ।
किं वा स्याच्छरणं ममाल जनताहासास्पदस्यान्वहं
वाणि त्वच्चरणारविन्दयुगलं त्यक्त्वा न मेऽन्या गतिः॥

षड्विंशच्छरदो वृथैव हि मया नीताश्च काकादिव-
न्न ध्यातं पदमीश्वरस्य न कृता सेवा गुरोः सादरम् ।
चित्ते नापि परोपकारसरणिर्नैव स्मृता वच्मि किं
वाणि त्वच्चरणारविन्दयुगलं त्यक्त्वा न मेऽन्या गतिः॥

सत्यं वच्मि न चाहमम्ब नितरां लुब्धोऽर्थसंयोजने ।
दारापत्यगृहादिबन्धनमहो त्यक्तुं न वास्त्युद्यमः ।
कस्मान्मे जनिमृत्युसिन्धुतरणं प्राप्तिः परःश्रेयसो
वाणि त्वच्चरणारविन्दयुगलं त्यक्त्वा न मेऽन्या गतिः॥

वंशे जन्म ममाभवच्छ्रुतिविदां सङ्गोऽपि सद्भिः सहै-
वा बाल्यात्सततं विलोकनमहो सद्धर्मसत्कर्मणाम् ।
सत्यप्येवमनेकजन्मसुकृतैः पापैर्न शान्तं मनो
वाणि त्वच्चरणारविन्दयुगलं त्यक्त्वा न मेऽन्या गतिः॥

क्षेत्रारामगृहादिरत्र शरणं न स्याद्यमस्यान्ततः
पाशेनावृतदेहिनोऽपि पितरौ भार्या सुता वा सुहृत् ।
शास्त्रज्ञानमितोऽपि येऽत्र विभवा व्यर्था भवेयुः क्षणा-
द्वाणि त्वच्चरणारविन्दयुगलं त्यक्त्वा न मेऽन्या गतिः॥

तुङ्गातीरविहारलोलहृदये गङ्गाधरेणादृते
तुङ्गानन्दविधायिनि प्रणमतां शृङ्गारजन्मावने ।
गङ्गावारिसदृक्षहारविलसद्वक्षोजभारानते
वाणि त्वच्चरणारविन्दयुगलं त्यक्त्वा न मेऽन्या गतिः ॥

मन्दानां मतिदानकल्पलतिके मन्दस्मितेनोज्ज्वले
मन्दारादिसुमालिभूषितकचे मन्दान्यमोदप्रदे ।
मन्दं गामिनि मन्दताततुलनाभाद्योतिताशादशे
वाणि त्वच्चरणारविन्दयुगलं त्यक्त्वा न मेऽन्या गतिः ॥

मानातीतकृपे विनम्रनिकरे दीनावनात्तादरे
एणाङ्काङ्कुरलाञ्छितालकपदे मेनात्मजासंनुते ।
मानाथप्रभवप्रभूतविभवे नानाविभूषान्विते
वाणि त्वच्चरणारविन्दयुगलं त्यक्त्वा न मेऽन्या गतिः ॥

यस्मादुद्भवतः प्रशस्तकदलीस्तम्भौ ततश्चाम्बरं
तत्रागाधसरस्ततोऽपि भुजगी तस्या गिरीन्द्रद्वयम् ।
तस्मात्कम्बुरतः सुधामयकरस्तस्मिंश्च कुन्दावलि-
र्वाणि त्वच्चरणारविन्दयुगलं त्यक्त्वा न मेऽन्या गतिः ॥

लानिर्मितसर्वलोकनिचये नीलालकालंकृते
बालादित्यनिभाम्बरावृततनो कीलालजातानने ।
ढोलायाङ्कपिनद्धपद्मभवने दोलायमानात्मनो
वाणि त्वच्चरणारविन्दयुगलं त्यक्त्वा न मेऽन्या गतिः ॥

श्रोत्रे ग्राम्यकथादरे न हि पुनर्मातुः कथायां सक्त-
न्नेत्रे दर्शनलालसे मृगदृशां कामं न मूर्तेस्तव ।
चित्तं वित्तचये विलीनमनिशं सक्तं न तत्त्वपदे
वाणि त्वच्चरणारविन्दयुगलं त्यक्त्वा न मेऽन्या गतिः ॥

चेतश्चञ्चलदृक्कुचाचलचरं दृष्टं मुहुः कन्यया
नागेन्द्रस्य निमग्नमम्ब सरसि स्वास्थ्यं न चागान्मम ।
किं कुर्यां कितवेन साकमनिशं चित्तेन मैत्रीकृतो
वाणि त्वच्चरणारविन्दयुगलं त्यक्त्वा न मेऽन्या गतिः ॥

भक्ताज्ञानतमःप्रमापणचणं मुक्तात्महृद्गोचरं
शक्तं ब्राह्ममनोऽब्जबोधनविधौ नक्तंदिवं भास्वरम् ।
त्यक्ताहंकृतिमातनोति यदिदं भानुं स्वकीयैर्गुणै-
र्वाणि त्वच्चरणारविन्दयुगलं त्यक्त्वा न मेऽन्या गतिः ॥

यन्नित्यं नतचित्तकैरवतते राकाशशाङ्कायते
यत्संसारमहाब्धिमग्नजनतासंतारनौकायते ।
यत्तत्पद्मजजीवसस्यविभवे नीलाम्बुवाहायते
वाणि त्वच्चरणारविन्दयुगलं त्यक्त्वा न मेऽन्या गतिः ॥

यद्वैधीं नतफालपट्टलिखितामुन्मृज्य दुष्टां लिपिं
दद्यादाशु विनिर्जितेन्द्रविभवां निश्चञ्चलां च श्रियम् ।
यद्भक्तः शुकवामदेवसहभूस्तूर्णं विरक्तया भवे-
द्वाणि त्वच्चरणारविन्दयुगलं त्यक्त्वा न मेऽन्या गतिः ॥

यत्कान्त्यै यतते प्रदोषजनितो रागः प्रकामं मुहु-
र्दृष्ट्वा यन्नखकान्तिमब्जरुचयो दास्यं भजन्ते सदा ।
यत्तन्मार्दवलिप्सया प्रकुरुते सेवां मुदा पल्लवो
वाणि त्वच्चरणारविन्दयुगलं त्यक्त्वा न मेऽन्या गतिः ॥

यद्भासा विजितः सहस्रकिरणः पूजां करोत्यादरा-
द्यलेन प्रतिपद्य हंसपदवीं कर्मन्दिराजच्छलात् ।
यस्मात्स्वस्तरुरार्तभावमभजद्भक्तेष्टदानेऽनिशं
वाणि त्वच्चरणारविन्दयुगलं त्यक्त्वा न मेऽन्या गतिः ॥

नत्यर्थं परितो मिलत्सुरवधूधम्मिल्लराजत्सुम-
व्रातस्यन्दिमरन्दनिर्जरसरित्कूर्मायमाणं हि यत् ।
यद्विश्वं धरते सलीलमनिशं तत्स्थावरं जङ्गमं
वाणि त्वच्चरणारविन्दयुगलं त्यक्त्वा न मेऽन्या गतिः ॥

पूर्वं सौगततान्त्रिकादिकुमतव्यासावनौ दर्शनं
श्रौतं विस्तरितुं मिषेण भगवत्पादस्य योऽसौ शिवः ।
संप्राप्तः किल तस्य वादविजये यत्तत्पताकायितं
वाणि त्वच्चरणारविन्दयुगलं त्यक्त्वा न मेऽन्या गतिः ॥

रक्तं यत्स्वयमप्यलं सुखतमं गम्यं विरक्त्यैव त-
त्संसक्तं रजसाप्यहर्निशमहो सत्त्वात्मसंसेवितम् ।
आश्रित्यापि सदागतावलसतामानम्रजाड्यापह-
द्वाणि त्वच्चरणारविन्दयुगलं त्यक्त्वा न मेऽन्या गतिः ॥

यद्ब्रह्मादिसुरेन्द्रमानससरोहंसायितं भारति
यद्वापौरुषवाङ्मनोहरलताकुञ्जे पिकस्त्र्यायितम् ।
यद्भक्तालिमयूरतोषणविधौ वर्षर्तुमेघायितं
वाणि त्वच्चरणारविन्दयुगलं त्यक्त्वा न मेऽन्या गतिः ॥

यत्साद‍ृश्यविलिप्सया करपदाद्यङ्गानि नित्यं बला-
त्संकोच्याप्सु तपः करोति नितरां कूर्मो निमग्नः स्थिरः ।
गङ्गा यन्नखकान्तिसख्यहृदया शंभोर्जटागह्वरे
वाणि त्वच्चरणारविन्दयुगलं त्यक्त्वा न मेऽन्या गतिः ॥

यद्भक्तास्यबिलाद्विनिःसृतझरी वाचां विजेत्री भवे-
त्स्वर्धुन्याः सहसा तथा सुरगुरोर्द्राक्षारसस्यापि तत् ।
जित्वा सर्वमपि स्वयं च भजते दास्यं परब्रह्मणो
वाणि त्वच्चरणारविन्दयुगलं त्यक्त्वा न मेऽन्या गतिः ॥

यत्प्राप्त्यै कृपया जगौ श्रुतिततिर्मातेव कर्माखिलं
श्रौतं स्मार्तमतोऽपि शुद्धमनसां योगं मनोरोधकम् ।
तस्माज्ज्ञानमशेषसंसृतिहरं शुद्धं विवेकात्मनां
वाणि त्वच्चरणारविन्दयुगलं त्यक्त्वा न मेऽन्या गतिः ॥

यस्यानुग्रहमन्तरेण फलवन्न स्यान्महद्वा तप-
स्तद्वद्वेदशिरोविचारकलनं न ज्ञानहेतुर्भवेत् ।
तस्माद्ब्रह्ममुरारिशंकरमुखाः सक्ताश्च यत्पूजने
वाणि त्वच्चरणारविन्दयुगलं त्यक्त्वा न मेऽन्या गतिः ॥

यद्वैधात्रपदं तनोति तृणतोऽप्यल्पं नतालेः पुनः
का वा देवपतेः पदस्य गणना कर्मक्षयान्नश्यतः ।
यद्वा भूमिपतेः श्रियं स्मृतिपथाद्दूरं करोत्यन्वहं
वाणि त्वच्चरणारविन्दयुगलं त्यक्त्वा न मेऽन्या गतिः ॥

कोशानामपि पञ्चकं मननतो निश्चित्य नात्मेति
यत्पश्चाद्वेदविदः प्रपद्य शरणं नैवाश्रयन्ते भवम् ।
यद्भासा सकलं विभाति न पुनर्भास्यं यदन्येन त-
द्वाणि त्वच्चरणारविन्दयुगलं त्यक्त्वा न मेऽन्या गतिः ॥

सालोक्यं प्रवदन्ति केचन सुखं सामीप्यमन्ये जगुः
सारूप्यं ह्यपरे विदुः परतरं सायुज्यमद्वैतिनः ।
निश्चेतुं न हि शक्यमत्र तदिति ह्यज्ञस्य दुःखापह-
द्वाणि त्वच्चरणारविन्दयुगलं त्यक्त्वा न मेऽन्या गतिः ॥

यत्सांनिध्यबलात्प्रपञ्चमखिलं ब्रह्मा सृजत्यन्वहं
विष्णुः पाति विलासतः पशुपतिर्नाशं विधत्ते मुदा ।
यत्यक्त्वा प्रभवन्त्यमी विधिमुखाः शक्ता न च स्पन्दितुं
वाणि त्वच्चरणारविन्दयुगलं त्यक्त्वा न मेऽन्या गतिः ॥

यद्वाङ्मानसगोचरो न भवति श्रुत्या न वा शक्यते
निर्देष्टुं न च बुध्यते चिरतराभ्यासानुभूती विना ।
जाग्रत्स्वप्नसुषुप्तिषु स्फुटतरं संवित्तया भाति त-
द्वाणि त्वच्चरणारविन्दयुगलं त्यक्त्वा न मेऽन्या गतिः ॥

यद्वक्त्रव्यपदेशतो हिमरुचिः संसेवते ह्यादरा-
त्ताराश्चापि सुदन्तपङ्क्तिमिषः कैश्यच्छलेनाम्बुदः ।
तादात्म्यं प्रतिपद्य भूतलगतः कूर्मो गतिं दिग्गजाः
वाणि त्वच्चरणारविन्दयुगलं त्यक्त्वा न मेऽन्या गतिः ॥

निश्चेतुं किल शक्यमम्ब न पुरा पूजा सगन्धैः सुमै-
र्जातु त्वत्पदयोः कृतेति यदिदं वर्ष्माद्य संपादितम् ।
मन्तुं नैव यते कुतोऽर्चनविधिः सिद्धा पुनर्मे जनि-
र्वाणि त्वच्चरणारविन्दयुगलं त्यक्त्वा न मेऽन्या गतिः ॥

अज्ञात्वा विहितं निषिद्धमिति यत्कर्मात्र पश्चादिव-
स्त्वच्छन्दं विरचय्य रौरवगतां हिंसां सहन्तु प्रजाः ।
ज्ञात्वाप्यादरपूर्वकं प्रतिकलं कुर्यामहं पातकं
वाणि त्वच्चरणारविन्दयुगलं त्यक्त्वा न मेऽन्या गतिः ॥

त्वङ्मांसास्थिपुरीषमूत्रकलिते कल्पान्तकालानिल-
प्रक्षुब्धाब्धितरङ्गबुद्बुदसमे काये कृतान्तप्रिये ।
कृत्वा प्रीतिमनुत्तमामनुकलं पापार्जनं कुर्वतो
वाणि त्वच्चरणारविन्दयुगलं त्यक्त्वा न मेऽन्या गतिः ॥

आज्ञां देशिकसार्वभौमकलितां स्वीकृत्य मूर्ध्नां मया
कृत्वा चोद्यममात्मबुद्धिसदृशं पद्यैः स्तुता भारती ।
श्रुत्वा डिम्भविकत्थनं गुरुमिषात्संबोधितात्मोदया
वाणी तुष्यतु बालमेनमवतु स्वीयैः कटाक्षामृतैः ॥

इति श्रीशारदास्तोत्रम् संपूर्णम् ॥



॥ ॐ ॥

# ॥ श्रीमच्छंकरभगवत्पादावतारभूप्रशंसा ॥



नत्वा विघ्नविभेदकं गजमुखं स्तुत्वा विधातुः प्रियां
मत्वा मान्यतमं च देशिकपदाम्भोजातयुग्मं मुदा ।
कुर्वे कंचिदिह प्रयत्नमधुना वक्तुं यथाशेमुषि
श्रीमच्छंकरदेशिकेन्द्रजननस्थानप्रशस्तिं शुभाम् ॥ १ ॥

अस्ति प्रशस्ता किल राजधानी
श्रीवञ्चिभूपान्वयसंभवानाम् ।
राज्ञां विचित्रा भुवि केरलेषु
प्रासादवापीपरिखा मनोज्ञा ॥ २ ॥

यस्मात्फणीन्द्रं परिकल्प्य शय्यां
तस्यामनन्तः सततं हि शेते ।
तस्मात्किलास्या महती प्रसिद्धिः
समागतानन्तपुरीति लोके ॥ ३ ॥

तिष्येऽपि धर्मो नियतं चतुर्भिः
पादैः सदा संप्रकरोति वासम् ।
वर्णाश्रमाचारनिषक्तचित्ता
लोका भवन्त्यत्र हगध्वनीनाः ॥ ४ ॥

वीथ्यां वीथ्यां यत्र देवालयाः स्यु-
र्भक्त्या लोका यत्र धूपप्रदीपैः ।
भक्ष्यैर्भोज्यैः पायसैश्चापि देवा-
न्सायंप्रातः सम्यगाराधयन्ति ॥ ५ ॥

प्रातः स्नात्वा शीतवारिण्यजस्रं
चा शूद्रान्तब्राह्मणा नित्यकृत्यम् ।
यावच्छक्यं स्वस्ववर्णानुरूपं
कृत्वा देवस्थानमादौ भजन्ते ॥ ६ ॥

नत्वा देवं भक्तिभावेन सम्य-
ग्धृत्वा मूर्ध्ना देवपूजाप्रसादम् ।
मत्वात्मानं जन्तवो धन्यतायाः
पात्रं यस्यां वाह्यकार्यप्रसक्ताः ॥ ७ ॥

नित्यं यत्र ब्राह्मणा भोजनार्थं
त्यक्त्वा चिन्तां प्राप्नुयुः पक्वमन्नम् ।
विद्वद्वर्या वस्त्रभूषाविशेषान्
राज्ञश्चाप्त्वा विक्रमादीन्स्मरन्ति ॥ ८ ॥

जयति जयति तस्यां वञ्चिवंशाब्धिचन्द्रः
सकलगुणगणानामाकरः सत्यवादी ।
बुधजनहितकारी मूलनक्षत्रजन्मा
नृपतिरमिततेजाः पद्मनाभप्रसादात् ॥ ९ ॥

तत्पत्तनाद्द्वादशयोजनेषु
दिश्युत्तरस्यां किल कालटीति ।
संराजते कश्चन भूमिभागः
पूर्णानदीपुण्यतटेऽतिरम्यः ॥ १० ॥

यस्मिन्पुरा जन्म पुरान्तकारी
लेभेऽब्जजातप्रमुखामरेन्द्रैः ।
संप्रार्थितः सन्मतरक्षणार्थ-
माख्यां वहन् शंकर इत्यवन्याम् ॥ ११ ॥

यद्वद्गौतमयोगिराट्प्रियतमा दीना पवित्रीकृता
जानक्याः प्रियभर्तुरङ्घ्रिकमलन्यासेन तद्वत्पुरा ।
या भूः शंकरदेशिकाङ्घ्रिकमलन्यासैः कृतार्थीकृता
सेयं पुण्यतमा जयत्यतितरां पूर्णातटिन्यास्तटे ॥

मध्ये मार्गमहो जनार्दनमिति ख्यातं पृथिव्यां जनैः
क्षेत्रं पश्चिमसागरस्य विमले तीरे विभाति स्वयम् ।
यत्रास्ते कमलापतिः स भगवांस्त्रैलोक्यरक्षामणि-
र्भक्तानामभयं वरांश्च विविधान्प्रीत्या प्रयच्छन्सदा ॥

ततः परस्तादपि दिव्यमन्य-
त्क्षेत्रं ह्युदीच्यां दिशि माधवस्य ।
विलोक्यते यत्र च कृष्णमूर्ति-
र्दिने दिने तृप्यति पायसस्य ॥ १४ ॥

तस्योत्तरस्यां दिशि चन्द्रमौले-
र्भक्तार्तिहन्तुर्गिरिजाधवस्य ।
स्थानं महत्तुल्यमिदं हि काश्या
दीव्यत्यहो केरलभूमिभागे ॥ १५ ॥

यत्र नित्यमधिकं वरयन्ते
शंकरं निजमनोरथसिद्ध्यै ।
ईप्सितान्यतिजवाल्लभमाना
आचरन्ति मनुजा बहु सेवाः ॥ १६ ॥

यस्यां मातृहितैषिणा भगवता श्रीशंकरेणादरात्
पूर्णा पुण्यसरित्स्ववेश्मनिकटं नीता स्तवैस्तोषिता ।
स्तुत्वा यत्र रमां मनोहरतरैः पद्यैर्द्विजं चातनो-
दाढ्यं सा खलु कालटी विजयते निर्वाणसंदायिनी ॥

यत्र चूतपनसामलकाद्या
जात्यशोकतिलका बहु वृक्षाः ।
छायया भवदवानलतप्ता-
ञ्जीवयन्त इव भान्ति नितान्तम् ॥ १८ ॥

साधुचित्तमिव यत्र विशुद्धा
शीततोयभरिता जगदार्तिम् ।
धुन्वती प्रवहति प्रतिघस्त्रं
वारुणीं दिशमहो सरिदग्र्या ॥ १९ ॥

भाति यत्र भगवान्मुनिचित्त-
न्यस्तपादयुगलः शुभमूर्तिः ।
रुक्मिणीहृदयपङ्कजभानुः
कृष्ण एष नवनीतकराब्जः ॥ २० ॥

जडोऽपि नक्रः खलु शंकरस्य
जग्राह पादं विदिताशयः सन् ।
न्यस्तं विदित्वा समयं निजेष्टं
मात्राज्ञया यत्र च कर्मजालम् ॥ २१ ॥

केरलक्षितिभृता तनयार्थं
याचितो वरमदान्नृवराय ।
यत्र शंकरवटुः क्षितिपेन
प्रापितं धनममन्यत तुच्छम् ॥ २२ ॥

शंकरेण सह मन्त्रणबुद्ध्या
कुम्भसंभवमुखा मुनिवर्याः ।
यत्र जग्मुरवलोक्य तदीयां
मातरं सुतपुराकृतमूचुः ॥ २३ ॥

वशगावशगा वापि यदि स्मरसि मां सुतम् ।
मातस्त्यक्त्वाखिलं कार्यमेष्यामि तव संनिधिम् ॥

मृतायां त्वयि संस्कारं करिष्ये प्रीतिमाप्नुहि ।
इति यत्र वरं मात्रे ददौ शंकरयोगिराट् ॥ २५ ॥

यत्रावसानसमये मातुः प्राप्यान्तिकं दूरात् ।
परमं तारं सार्थं भगवानाह स्म मुक्तिदं विमलम् ॥

निर्मथ्य बाहुमूलं दक्षं यत्नाद्धुताशनं लब्ध्वा ।
अदहद्यत्र कलेवरमम्बायाः शंकरः प्रीत्या ॥ २७ ॥

शप्ता यत्र सनाभयो भगवता क्रुद्धेन यावत्कुलं
न स्यादध्ययनं भवत्सु सुतरां वेदस्य तद्वत्पुनः ।
भिक्षा नैव भवेत्कदापि यमिनामस्तु श्मशानं गृहे
त्वित्यद्याप्यनुभूयते किल फलं पापस्य तत्कैर्जनैः ॥

तस्मादृशी पुण्यमयी हि दृष्टा
भूमिः पुरात्तैर्विविधैश्च पुण्यैः ।
धन्योऽस्मि धन्यं च कुलं मदीयं
धन्यः पिता धन्यतमा ममाम्बा ॥ २९ ॥

अद्राक्षमानन्दमहाब्धिपारं
संसारहारं नतपापदारम् ।
श्रीदेशिकोत्पत्तिविनीतभारं
जन्तोर्जराजन्मतृषार्तिनीरम् ॥ ३० ॥

अद्राक्षमानम्रजनार्तिशत्रुं
श्रद्धाविरागात्मवतां हि मित्रम् ।
चित्ताख्यवृक्षप्रविभेददात्रं
शान्तं पवित्रं गुरुजन्मपात्रम् ॥ ३१ ॥

अद्राक्षमाधारमहो गुणानां
गोप्तारमस्मादृशपापिनां च ।
दातारमात्मावगतेर्नतानां
नेतारमस्माकममार्गगानाम् ॥ ३२ ॥

अद्राक्षमासेचनकं भवाब्धौ
मज्जज्जनानामतिदुःखभाजाम् ।
संसारसिन्धोस्तरणे सुखेन
नौकायितं देशिकजन्मदेशम् ॥ ३३ ॥

अद्राक्षं कमपि प्रदेशमधुना शान्तं नितान्तं मनो-
राजीवस्य विकासकं नयनयोराश्वासकं धीमताम् ।
किं वा शंकरदेशिकेन्द्रजननप्राप्तप्रतिष्ठो महान्
देशोऽयं कथमन्यथा मुदमिमां देशो विदध्यात्परः ॥

अद्राक्षं यमिचक्रवर्तिजननप्राशस्त्यतुच्छीकृत-
श्रीकाशीमथुराप्रयागमुखरक्षेत्रप्रशस्तिं भुवम् ।
यस्या दर्शनमात्रतो जनततिर्विन्देद्विरक्तिं तथा
मुक्तिं जन्मजराविपत्तिमरणाद्दूरां सकृद्वा भुवि ॥

अद्राक्षं मदमानमत्सरमहाहंकारगर्वंकषं
श्रद्धाशान्तिविचारतोषकलने भक्तौघकल्पद्रुमम् ।
आशाशृङ्खलबद्धपादजनताबन्धाच्छिदं सत्वरं
पूर्णापुण्यतटे लसन्तममलं जन्मप्रदेशं गुरोः ॥ ३६ ॥

यद्दर्शनादद्य कृतार्थ आसी-
दात्मा ममायं चिरजातकाङ्क्षः ।
तद्दर्शनं कर्तुमहो सहायं
चक्रे सखा मे खलु रामचन्द्रः ॥ ३७ ॥

नाहं विजाने कथमस्य कुर्यां
सख्युः प्रियां चोपकृतिं ह्यशक्तः ।
मित्रं किमु प्रत्युपकारमिच्छ-
न्मित्रात्प्रकुर्यात्समये सहायम् ॥ ३८ ॥

तस्मिन्मित्रवरे ममास्तु सततं प्रीत्या प्रसादाद्गुरो-
र्यावज्जीवदशं कृतज्ञधिषणामात्रं तदन्या तु मा ।
नूनं तेन परोपकारविषये न्यस्तात्मतन्त्रः सखा
विन्देत्तोषमयं क्रमो हि जगति ख्यातो विवेकात्मनाम् ॥

द्रष्टुं वाञ्छति मामकं किल मनः प्रासादभूषान्विते
कैलासाद्रिनिभोन्नते परगुरोर्मूर्तिं शिलामन्दिरे ।
कालट्यां किमहं भवामि तरसा तत्तादृशस्याकरो
भाग्यस्येति परं ममाद्य महती जागर्ति चिन्तान्वहम् ॥

रे रे मानस मा करोतु च भवान् स्वात्मानमद्यैव त-
च्चिन्तापात्रमवेहि संयमिवरः शृङ्गाद्रिवासी गुरुः ।
तूर्णं सुन्दरमेकमालयमहो निर्माप्य पूर्णातटे
मूर्तिं तत्र निधाय शंकरगुरोः कुर्याद्धितं तावकम् ॥

श्रीमच्छृङ्गपुरीविहाररसिकाः श्रीदाक्षिणाम्नायगा
अस्मत्प्राक्तनभागधेयकलिका आचार्यपादा इह ।
मूर्तिं शंकरदेशिकेन्द्रजननस्थाने तदुद्बोधिका-
माधातुं नृपतेश्च केरलभुवः साह्येन जातस्पृहाः ॥

एतावत्समयं न केनचिदहो यत्नः कृतः सादरं
नैतत्साधु कृतघ्नतापरिहृतिर्नास्माकमद्वैतिनाम् ।
इत्यस्मद्गुरुपुंगवैरनुदिनं संचिन्तयद्भिर्हितं
लोकस्याद्य विनिश्चितं जनि भुवि क्षेप्तुं प्रतीकं गुरोः ॥

विज्ञाय सम्यङ्निजभृत्यवर्गा-
त्प्रस्थानमार्गप्रमुखान्विशेषान् ।
जगद्गुरोर्जन्मभुवस्ततोऽभू-
त्प्रस्थातुकामः सहसा यमीन्द्रः ॥ ४४ ॥

अर्चां विधायाथ जगज्जनन्या
भक्त्या प्रणम्यार्थयदभ्यनुज्ञाम् ।
यात्रा मदीया हितकारिणी चे-
ल्लोकस्य ते शासनमम्ब देहि ॥ ४५ ॥

अब्दे परापूर्वभवाह्वये स्या-
न्माघे प्रशस्ता सितपञ्चमी ते ।
तस्यामितः प्रस्थितिमातनु त्वं
भवेद्धि सा लोकहिताय नूनम् ॥ ४६ ॥

इत्याह वाणी सदयं मुखेन
पञ्याः स्वहस्ते गुरुणार्पितायाः ।
लब्ध्वा गुरुः शासनमम्बिकायाः
प्रस्थानसंभारकृतेऽन्वशात्सः ॥ ४७ ॥

यद्यद्विधेयं भवतीह तूर्णं
तत्तद्भवन्तोऽधिकृताः समस्तम् ।
कुर्वन्तु यात्रार्थमिति प्रहृष्टाः
सज्जं नियोगाद्व्यदधुश्च तेऽपि ॥ ४८ ॥

वाण्योपदिष्टे सुदिने सुलग्ने
प्रस्थाय शृङ्गाद्रिपुरात्तपस्वी ।
विवेश भक्त्या भरितः स ऋष्य-
शृङ्गाश्रमं शान्तमनस्करम्यम् ॥ ४९ ॥

विधाय पूजां विविधोपचारैः
स्तुत्वा मुनिं स्तोत्रशतैरुदारैः ।
प्रस्थातुमाज्ञामधिगत्य तस्मा-
त्ततो नृसिंहाचलमाप्रतस्थे ॥ ५० ॥

निनीय कंचित्समयं समाधौ
गिरेर्गुहायां यमिसार्वभौमः ।
कर्णाटभूपो गुरुदर्शनार्थी
शृङ्गाद्रिमायास्यति कृष्णराजः ॥ ५१ ॥

मात्रादिभिः साकमिति प्रवादं
श्रुत्वा ययौ शृङ्गपुरं कृपालुः ।
निजाश्रमं प्राप्तवते नृपाय
यथोचितं सत्कृतिमातनोत्सः ॥ ५२ ॥

नृपोऽपि तस्मै निजदेशिकाय
महार्घवस्त्राभरणोपहारम् ।
प्रदाय तस्मात्परदेवताया
मनुं समासाद्य कृतार्थ आसीत् ॥ ५३ ॥

प्रस्थाप्य पूर्वं नृपतिं पुरस्ता-
त्कर्मन्दिराद् प्रस्थितिमाचकाङ्क्ष ।
कर्णाटदेशे प्रथमं जनाना-
मास्तिक्यकर्माचरणे दिदृक्षुः ॥ ५४ ॥

तत्रैव मासांश्चतुरश्चरित्वा
क्रमादसौ पत्तनमाससाद ।
यत्स्थानमासीत्क्षितिपालनीतेः
कल्याणनाम्ना यदुदाहरन्ति ॥ ५५ ॥

सार्धैकमासावधि तत्र कालं
नीत्वा हितैषी नतलोकपङ्क्तेः ।
गुरूत्तमाराधनलोलचित्ता-
न्दृष्ट्वार्यमूर्तेरकरोत्प्रतिष्ठाम् ॥ ५६ ॥

श्रीकृष्णभूपालवरेण कामं
संप्रार्थितस्तद्गृहपावनाय ।
गन्तुं स ऐच्छत्किल राजधानीं
कल्याणपुर्यां हृषितान्तरङ्गः ॥ ५७ ॥

तस्यामुषित्वा दिवसांश्च कांश्चि-
त्प्रसादपात्रं प्रविधाय भूपम् ।
ततः परस्ताद्गरलाभिधानां
पुरीमगात्पर्वतजासखस्य ॥ ५८ ॥

शाल्यन्नपञ्चामृतधूपदीपै-
र्विशेषपूजां विधिवद्विधाय ।
संप्रार्थ्य शंभुं जनतार्तिशान्त्यै
तस्माद्ययौ पर्वतनिम्नदेशम् ॥ ५९ ॥

गोपशेट्टिपदपूर्वकपाल्ये
भूसुरेन्द्रगृहराजिमनोज्ञे ।
प्रावृषि प्रतिदिशं कृमिकीटै-
र्मार्गमावृतमवेक्ष्य यतीशः ॥ ६० ॥

तद्व्यथां परिजिहीर्षुरमुष्मि-
न्ग्राम एव वसतिं प्रतिजज्ञे ।
आ शरत्समयमादृतदीक्षः
स्वात्मधर्मपरिपालनवीक्षः ॥ ६१ ॥

तत्र तत्र विचरन्नतलोका-
न्धर्मवर्त्मनिरतान्परिकल्प्य ।
जम्बुनाथपदपद्मदिदृक्षुः
जम्बुकेश्वरमथ प्रविवेश ॥ ६२ ॥

रङ्गनाथपुरमेत्य ततः श्री-
रङ्गयोः पदयुगं प्रणिपत्य ।
आतनोत्स्तुतिमसौ कविहृद्यै-
स्तद्गुणालिभरितैर्बहुपद्यैः ॥ ६३ ॥

रामसेतुमधिगत्य ततोऽसौ
रामचन्द्रचरणौ हृदि कुर्वन् ।
मज्जनादिविहितं विदधानः
सोऽध्युवास रजनीत्रयमत्र ॥ ६४ ॥

रामनाथमभिषेचयति स्म
स्वर्धुनीशिशिरशीकरतोयैः ।
रूपिका दशशतीरथ भक्त्या
स्वर्णपात्रसहिता वितताार ॥ ६५ ॥

अथ प्रतस्थे मधुरां यमीन्द्रो
रामेश्वरात्पाण्ड्यनृपालपुलीम् ।
स्तोतुं प्रणन्तुं तरसा विधातुं
स्वात्मानमस्याः सदनं कृपायाः ॥ ६६ ॥

प्रणम्य पूर्वं पुरवैरिभाग्यं
भक्त्या परस्ताद्विधुबालमौलिम् ।
श्रीसुन्दरेशं मधुरापुरेशं
स्तुतिं वितेने विविधैश्च वृत्तैः ॥ ६७ ॥

तत्रैव कांश्चिद्दिवसानुषित्वा
देवालये देवपदाब्जभृङ्गः ।
मन्त्रैश्च यन्त्रैर्विविधार्तियुक्ता-
नन्वग्रहीद्बोधनतो मुमुक्षून् ॥ ६८ ॥

वस्तुं प्रावृषि योग्यदेशमभितः संवीक्ष्य कर्मन्दिराट्
तीरे ताम्रपदाग्रपर्णसरितश्चान्वर्थनाम्ना भुवि ।
ख्यातं तीर्थवनाश्रमैर्विलसितं हृद्यं विरक्तास्पदं
श्रुत्वा पापविनाशनं गुरुरसौ गन्तुं प्रतस्थे ततः ॥

दृष्ट्वा तं क्षेत्रराजं विमलतरनदीवारिपूरातिरम्यं
वृक्षैर्मेघालिभेदप्रकटनपटुभिर्नीपमाकन्दमुख्यैः ।
आक्रान्तप्रान्तदेशं जनचयविरलं वैरगन्धेन शून्यं
मोदात्तत्रैव मासत्रितयमधिवसंस्तत्त्वबोधं वितेने ॥

अभ्यर्थितश्छात्रगणैः प्रकामं
श्रीशालिवाटीशपुरात्तवासैः ।
भक्तालिवश्यः सहसा तदीयं
मोदाद्गुरुः पत्तनमाससाद ॥ ७१ ॥

शरत्प्रयुक्तां परदेवतायाः
पूजां विधिज्ञो विधिना प्रकल्प्य ।
विनेयवर्यान्विविधैः प्रसादै-
श्चान्वग्रहीत्तत्त्वविबोधनेन ॥ ७२ ॥

साध्वीव सिन्धुं प्रति ताम्रपर्णी
मिथः समागच्छति यत्र नित्यम् ।
तं देशमासाद्य गुरुर्गुरूणां
सस्नौ सदण्डः सह शिष्यवर्गैः ॥ ७३ ॥

पारेसमुद्रं निवसन्तमाद्यं
गुहं नतार्तीः सहसा हरन्तम् ।
पुरारिपुत्रं पुरुहूतमित्रं
द्रष्टुं यमीन्द्रः कुतुकी जगाम ॥ ७४ ॥

निमज्ज्य पूर्वं नियमात्पयोधौ
प्रविश्य देवालयमञ्जसासौ ।
विधाय पूजां यमिसार्वभौमः
षडाननं प्रार्थयदादरेण ॥ ७५ ॥

मन्यसे यदि भवान्भवसूनो
भाजनं जनमिमं करुणायाः ।
संनिधिं वितनुतामिह नित्यं
श्रेयसे नततेरिति मूर्तौ ॥ ७६ ॥

स्तुत्वा देवं स्वीयपद्यैरनेकै-
स्तद्ग्रथ्यलैः शांकरैः पद्यजातैः ।
कृत्वा शिष्यास्त्वाशिषः पात्रभूता-
न्यालां मौनी केरलेष्वाचकाङ्क्ष ॥ ७७ ॥

अभ्यागतं देशिकमात्मदेश-
सीमान्तिकं केरलभूमिपालः ।
भृत्याननुप्रेषयदार्यपादा-
नानेतुमात्मीयपुरीं दिदृक्षुः ॥ ७८ ॥

निदेशमालम्ब्य नृपस्य भृत्याः
सप्रश्रयं साञ्जलिबन्धमादौ ।
प्रणम्य भूमौ निजभर्तुरिष्टं
विज्ञापयामासुरथ प्रमोदात् ॥ ७९ ॥

विज्ञाय विज्ञो नृपतेरभीष्टं
सौजन्यसौशील्यगुणांश्च तस्य ।
आज्ञापयामास नृपस्य भृत्या-
न्यथाह राजास्तु तथेति योगी ॥ ८० ॥

कन्याकुमारीमथ संयमीन्द्रः
प्रविश्य तत्र त्रितयं दिनानाम् ।
वासं विधायादरपूर्वमस्वां
कन्याकुमारीं विधिवन्मुदार्चत् ॥ ८१ ॥

भक्तिप्रधानैरथ भूरिपद्यै-
रम्बां स्वकीयैर्मुदितान्तरङ्गः ।
स्तुत्वा नृपस्याभ्युदयं जनानां
तथा गुरुः प्रार्थयदाप्तकामः ॥ ८२ ॥

अथ प्रतस्थे भगवांस्ततोऽसौ
श्रीवञ्चिभूपान्वयराजधानीम् ।
शेते मुरारिः सततं हि यत्र
शेषे नृपो धर्मपथैकदृष्टिः ॥ ८३ ॥

अवाप्य तीरं सरितः समीपे
पुरस्य कर्मन्दिवरोऽवरुह्य ।
निमज्ज्य तत्रोषसि नित्यकृत्यं
पूजां वितेने विधुबालमौलेः ॥ ८४ ॥

यावद्रत्नमयं किरीटमतुलं संधार्य वस्त्रं तथा
योग्यं राजततन्तुराजिकलितं हारावलीमौक्तिकीः ।
सौवर्णीं शिबिकां यमीद्द पदयुगेनारूढवान्सादरं
तावन्मन्त्रिमुखाधिकारिनिवहः साकं बुधैर्वैदिकैः ॥

हस्ताम्बुजाताहृतपूर्णकुम्भैः
किं चाश्ववारैर्बहुपत्तिभिश्च ।
फलोपहारं गुरवे विधाय
चकार भूमौ विनतिं च भक्त्या ॥ ८६ ॥

मन्दस्मितलसदास्यो
मन्दं मन्दं विनेयवर्गस्य ।
नामादिप्रविशेषा-
न्पृच्छन्नागात्पुरस्य च द्वारम् ॥ ८७ ॥

देशिकागमनमादरपूर्वं
द्वारदेशमधिगत्य पुरस्य ।
संप्रतीक्ष्य नृपतिः पुरतोऽभू-
न्मार्ग एव यमिनः कृतदृष्टिः ॥ ८८ ॥

महीपतिर्देशिकदर्शनक्षणा-
त्कृताञ्जलिः स्वागतमाह योगिने ।
प्रणम्य पश्चाद्गुरुणाप्यनामयं
पृष्टः समग्रं विनतो व्यजिज्ञपत् ॥ ८९ ॥

आशिषा तमनुमान्य नृपालं
पत्तनं गुरुरथ प्रविवेश ।
तत्र तत्र रचितां प्रमदाभि-
र्मङ्गलारतिमसावनुपश्यन् ॥ ९० ॥

प्रदक्षणीकृत्य पुरं समागा-
द्रम्यं विशालं विमलं च वेश्म ।
यत्सज्जमासीन्नृपशासनेन
वासाय तत्रावततार विद्वान् ॥ ९१ ॥

अभ्यर्थितः केरलभूभुजासौ
दिनाष्टकं वासमियेष तत्र ।
सशिष्यवर्गस्य गुरोर्यथाव-
दातिथ्यमाधान्नरपालमौलिः ॥ ९२ ॥

उपहारतया जगद्गुरो-
र्दशसाहस्रमिताश्च रूपिकाः ।
व्यतरत्सहभर्ममालया
गजराजेन महोन्नतेन च ॥ ९३ ॥

वह्वीभिराशीर्भिरमुं नृपालं
कृत्वा कृतार्थं यमिचक्रवर्ती।
चक्रे प्रसादं कुलवृद्धिहेतो
राज्ञ्योस्तयोर्भूषणयोः कुलस्य ॥ ९४ ॥

पद्मनाभपदपद्ममरन्दा-
स्वादनादृतमतिर्यतिवर्यः।
देवतासदनमाप स पन्थां
पादयोर्भगवतः प्रणनाम ॥ ९५ ॥

प्रणम्य देवं पुरतः कृताञ्जलिः
स्थित्वा स्तवैर्भूपकुलाभिवर्धकैः।
प्रसाद्य देवं परितुष्टमानसो
मौनी न्यवर्तिष्ट निजाश्रमं ततः ॥ ९६ ॥

प्रस्थितिं पुरवरादनुमेने
शंकरार्यजनिभूमिमुपैतुम्।
क्षेत्रजातमभिवीक्ष्य पथीनं
कालटीसविधमाप जवात्सः ॥ ९७ ॥

स्वप्ने दृष्टिपथे गुरोरधिगता काचित्प्रवृद्धाबला
विश्वस्ता निशि वस्त्रभारविलसत्कक्षा स्मितेनान्विता ।
याहि त्वं तरसा मदीयभवनं निःशङ्कमेवेति तं
प्रोवाच प्रतिवाचमाह यमिराट् कासि क धामेति च ॥

न ज्ञायते किं मम धाम विद्व-
न्नहं तरोर्मूलगतास्मि नित्यम् ।
इति ब्रुवाणा तरसोपहासं
सान्तर्हिता विस्मयमादधाना ॥ ९९ ॥

ततः परेद्युः प्रविचार्य वृत्तम्
स्वप्नेऽनुभूतं प्रथमं न वेद ।
पश्चाद्भवेत्सा खलु योगिवर्य-
मातेति तर्कैर्दृढनिश्चितोऽभूत् ॥ १०० ॥

संकल्पितार्थेऽभिमतिं गुरूणाम्
विज्ञाय मातुर्मुदितान्तरङ्गः ।
काल्येऽगमत्कालटिनामधेयं
ग्रामं य आसीद्गुरुजन्मपूतः ॥ १०१ ॥

स्वामिन् लोकगुरो नियोगसदृशं सर्वं च सज्जीकृतं
प्रत्यक्षीक्रियतामिति प्रमुदिता भृत्याः प्रणम्याब्रुवन् ।
श्रुत्वा भृत्यनिवेदनं परगुरोः संस्थापनार्थं च तैः
यत्कर्माचरितं मुदा तदखिलं दृष्ट्वान्वमोदत्स्वयम् ॥

सद्मराजिपरिशोभितमार्गं
धान्यराशिपरिपूरितकोशम् ।
शाकपत्रतृणकाष्ठसमूहं
वीक्ष्य विस्मयमसौ प्रतिपेदे ॥ १०३ ॥

आगता बहवः शिष्या महोत्सवदिदृक्षया ।
अधिकारिभिरत्यर्थं यथायोग्यं च सत्कृताः ॥ १०४ ॥

समागतान्धूमरथेन कालटी-
रथावरोहस्थल एव सादरम् ।
विचार्य सत्कृत्य यथाभिवाञ्छितं
तानानयन्सत्वरमेव सेवकाः ॥ १०५ ॥

कालटीं विविशुर्यावत्तावत्तत्राधिकारिणः ।
अभ्येत्य पुरतस्तेषां पप्रच्छुः कुशलं मुदा ॥ १०६ ॥

वासाय वेश्म प्रवितीर्य तेषां
कोशाद्यथेच्छं प्रददुश्च भोज्यम् ।
अभ्यागताः स्वस्वनिकेतनेऽव-
स्थितिं व्यधुस्तत्र कृतोपचाराः ॥ १०७ ॥

रात्रिं दिवं चाद्रिनिभान्नराशिभिः
सूपैश्च शाकैर्बहुभक्ष्यपायसैः ।
संतर्पितो भूसुरसुन्दरीगणः
यथार्हमत्यादरतोऽधिकारिभिः ॥ १०८ ॥

प्रकाशमानैर्विधुबालतुल्यै-
र्दीपैर्बभौ कालटिमध्यभूमिः ।
तत्र प्रभेदं दिवसस्य रात्रे-
र्वक्तुं समर्थो ह्यभवन्न कोऽपि ॥ १०९ ॥

राज्ञा नियुक्ता भिषजस्तदानीं
महोत्सवे न ह्यलभन्त रुग्णम् ।
किं चित्रमेतद्भवरोगवैद्ये
नित्यं गुरौ जाग्रति कात्र पीडा ॥ ११० ॥

निर्माप्य शालां विधिवज्जगद्गुरु-
वेदीश्च कृत्वा विदुषो महीसुरान् ।
प्रवर्तयामास महाध्वरे ततो
वेदोक्तमार्गेण दिनेषु पञ्चसु ॥ १११ ॥

जलाधिवासं च ततोऽधिवासं
धान्येषु शय्याद्यधिवासनानि ।
श्रीशारदाशंकरदेशिकेन्द्र-
मूर्त्योः क्रमात्कारितवान्बुधेड्यः ॥ ११२ ॥

त्वारोऽध्वरदीक्षिता नियमतो विद्यां च पञ्चाक्षरीं
जप्त्वा कुण्डचतुष्टयेषु विधिवद्धुत्वा कृशानौ ततः ।
ार्याज्ञामनुरुध्य भूसुरवरा मूर्ती प्रतिष्ठापयां-
चक्रुः सौम्यसुमाघशुक्लदिनकृत्संख्यातिथौ सादरम् ॥

संकल्पितार्थमभिपूर्य जगद्धितेच्छुः
संतोष्य भूसुरवरान्बहुदक्षिणाद्यैः ।
विद्वज्जनान्विविधभूषणरांकवैश्च
संमान्य तोषमभजद्यतिसार्वभौमः ॥ ११४ ॥

मूर्त्योः सांनिध्यहेतोः प्रतिदिवसमसौ देशिकेन्द्रः पुरस्ता-
त्स्थित्वा संपूज्य देवौ विविधमनुवरान्संजपन्पद्यजातैः ।
स्तुन्वन्नर्चां विधातुं प्रथितकुलजुषो ब्राह्मणान्स्थापयित्वा
पूजानैवेद्ययोग्यां व्यधितदृढतरां वैदिकीं सुव्यवस्थाम् ॥

उवास मासत्रितयं हि तत्र
संबोधयन्नात्मविशुद्धतत्त्वम् ।
समागताञ्छात्रगणांस्तपस्वी
प्रस्थातुमैच्छत्किल शृङ्गशैलम् ॥ ११६ ॥

यस्मिन्स्वस्य प्रीतिरन्यादृगासी-
द्यस्याप्यासीद्भक्तिराबद्धमूला ।
तं चानेतुं प्रेषयामास शिष्या-
न्पात्रं कर्तुं देशिकानुग्रहस्य ॥ ११७ ॥

आज्ञां गुरूणां शिरसा गृहीत्वा
कर्णाटदेशाधिपकृष्णराजः ।
तत्रागमद्यत्र गुरोर्निवासो
याभूत्पुरा शंकरजन्मभूमिः ॥ ११८ ॥

समागतं भूमिपतिं यमीन्द्रः
प्रेम्णा समारोप्य समुज्ज्वलन्तीम् ।
आन्दोलिकां स्वागतपूर्वमेव
प्रावीविशत्तं बहुवाद्यघोषैः ॥ ११९ ॥

नीत्वा समं पार्थिवमादरेण
मातुस्तथा शंकरदेशिकस्य ।
यथावकाशं विरचय्य सेवां
पात्रं प्रसादस्य तयोर्व्यतानीत् ॥ १२० ॥

रात्रीरुषित्वा गुरुसंनिधाने
तिस्रः प्रपद्यान्यजनैरलभ्यम् ।
श्रेयः पुरीं स्वामगमन्नरेन्द्रो
नत्वा गुरुं नन्दितहृत्सरोजः ॥ १२१ ॥

जयतु जयतु देवी शारदा पारदाभा
जयतु जयतु देवः शंकरार्यो गुरुर्नः ।
जयतु जयतु पूर्णा कालटीक्षेत्रमध्ये
जयतु जयतु धर्मो वेदमार्गानुसारी ॥ १२२ ॥

इति श्रीमच्छंकरभगवत्पादावतारभूमशंसा संपूर्णा ॥

## श्रीशारदानुग्रहप्रकारनिवेदनम् ॥



स्वप्नेऽहं पूर्वरात्रौ गुरुवर पुरतो वाक्सवित्र्याः स्थितः स-
न्देवीखड्गाख्यमालामनुवरमपठं मातरि न्यस्तदृष्टिः ।
तूष्णीं स्थित्वा क्षणं सा तदनु बहुरुषा धुन्वती मस्तकं मां
संलास्योत्थाय पीठान्मम नयनपथाद्दूरगाभून्न जाने ॥

अज्ञात्वा कोपहेतुं विमुखमुपगतां वीक्ष्य देवीं च मन्दः
कर्तव्यांशं ह्यजानन्नयनयुगलतो बाष्पसेकं विधाय ।
उच्चैः क्रन्दन्नवन्यां मुहुरतिकरुणं पातयन्मच्छरीरं
स्वामिन्निच्छन्प्रसादं झटिति जनिमतां मातुरासं तथैव ॥

स्मृत्वा मद्विषये भवद्भिरचितामभ्यर्थनां वा गुरो
श्रुत्वा वा निनदं मदीयमतुलं दीनं शुचाक्रन्दितम् ।
आर्द्रान्तःकरणा विचार्य निपुणं निश्चित्य मां भाजनं
कर्तुं स्वीयदयारसस्य रमणीधातुर्व्यधात्कौतुकम् ॥

स्नानार्थं सरितं गतेव जननी धृत्वार्द्रवस्त्रं ततो
मद्भाग्यात्पुनरेत्य किंचिदपि मां नोक्त्वा प्रविश्यान्तरम्।
स्वीकृत्याम्बरमन्यदम्बुजमुखी चागत्य बाह्याङ्गणं
मामाहूय पदेन ताडितवती वामेन बालं जनम् ॥ ४ ॥

आदायान्तिकमादरेण सहसा संस्थाप्य मूर्ध्नि स्वयं
पादं मामनुगृह्य वक्त्रकुहराद्धस्तेन धृत्वा रसम् ।
ताम्बूलस्य निषेवणाय जगतां मातानुशास्यार्भकं
तुल्यं मामकरोत्स्वभक्तजनतामुख्येन मूकेन हि ॥

धन्योऽहं जगतीतले मम कुलं धन्यं तथा मत्पिता
माता धन्यतमा तथैव सुहृदो धन्या यतो भारती ।
कालेऽस्मिन्कलिदूषिते मयि वृथाहंकारडम्भाश्रये
पापेऽपि स्वयमेव दर्शितवती प्रीत्या प्रसादं ततः ॥

इति श्रीशारदानुग्रहप्रकारनिवेदनम् संपूर्णम् ॥



## ॥ गुरुनिवेदनम् ॥



किं वेदं यमिचक्रवर्तिमहिमा किं वा कृपावारिधे-
रुत्तुङ्गामृतवीचयः किमु मनः सूच्यास्तु कान्तं यतः ।
स्वर्भोगं प्रविहाय भूमिगमनायोद्यन्तमज्ञं जनं
शिष्टा पुण्यकलेव मां प्रतिपदं पश्चात्समाकर्षति ॥

हित्वा देशिकसंनिधिं विधिवशाद्गन्तुं कुतो निर्गतं
स्थित्वा सच्चिदपारसौख्यनिलये सौधे कृपावारिधिः ।
योऽसौ दीनजनं मुहुर्मुहुरहो वत्सं निबद्धा यथा गौः
प्रीत्या सविषादवीक्षणपदं चक्रेऽस्तु तस्मै नतिः ॥ २ ॥

कर्तुं किं मम शक्तिरस्ति गुरवे कीटस्य कांचित्प्रियां
साध्यां चोपकृतिं न वेद्मि बहुधा चिन्वन्नहं तादृशीम् ।
किं कुर्यां कृतकृत्यता मम कथं नाद्यापि भक्त्या मया
सेवाप्याचरिता तथापि गुरुराट् प्रीतिं करोत्येव हि ॥

युक्तं तद्भवतापतप्तजनतासंरक्षणायावनौ
　　संजातस्य जगद्गुरोः परहितस्यान्वेषणं संततम् ।
लोके चातपशीतवाततपनक्लेशानसह्यान्स्वयं
　　सोढ्वा मार्गतरुर्हि पान्थसुखदो निर्हेतुकं राजते ॥

नाहं त्यक्ष्ये गुरूणां पदकमलयुगं यावदायुर्वरेण्यं
धृत्वा मूर्ध्ना तदीयां परमसुखकरीं चाप्यनुज्ञामलङ्घ्याम् ।
बाढं मे निश्चयोऽयं यमिकुलतिलकश्चञ्चलं मां कटाक्षै-
र्बध्वा मह्यं त्वजस्रं दिशतु दृढतरं मानसं वृत्तिशून्यम् ॥

इति गुरुनिवेदनम् संपूर्णम् ॥



॥ श्रीः ॥

# श्रीवाणीविलासशास्त्रग्रन्थावलिः ।



१. अध्वरमीमांसाकुतूहलवृत्तिः । श्रीवासुदेवदीक्षितकृता । इयं वृत्तिः जैमिनीयसूत्राणामतिसरलया रीत्या अर्थावबोधिका चतुःषष्टिपृष्ठात्मिकाभिः संचिकाभिः प्रचार्येत । एकैकस्याः संचिकाया मूल्यम् — १ ०

अध्वरमीमांसाकुतूहलवृत्तौ प्रथमद्वितीयाध्यायौ । कलिकोबद्धौ स्वर्णाक्षरयुक्तौ । प्रत्येकम् — ३ ८

२. ब्रह्मसूत्रशांकरभाष्यम्, भामतीकल्पतरुपरिमलोपेतम् । वेदान्तशास्त्राभिधा अत्युत्कृष्टा इय पञ्चग्रन्थी अशीतिपृष्ठात्मिकाभिः संचिकाभिः प्रचार्येत । एकैकस्याः संचिकाया मूल्यम् — १ ०

३. श्रीमद्भगवद्गीता श्रीमन्निगमान्तमहादेशिकविरचिततात्पर्यचन्द्रिकासहितश्रीरामानुजभाष्योपेता । इयमपि चत्वारिंशत्पृष्ठात्मिकाभि. संचिकाभि. प्रचार्येति। एकैकस्याः संचिकाया मूल्यम — ० ८

५. काव्यालंकारसूत्रवृत्तिः । वामनविरचिता, गोपेन्द्रतिप्पभूपालरचितया कामधेन्वाख्यया व्याख्यया सहिता । कलिकोबद्धा स्वर्णाक्षरयुक्ता च — २ ८

६. ब्रह्मतत्त्वप्रकाशिका नाम ब्रह्मसूत्रवृत्तिः । श्रीसदाशिवेन्द्रसरस्वतीविरचिता। आङ्गलभाषायां श्रीसदाशिवेन्द्राणामतिमानुषेण चरित्रेण संभूषिता । इयं वृत्तिरतीव सरला सुप्रसिद्धा च । कलिकोबद्धा स्वर्णाक्षरयुक्ता च — २ ०

७. शास्त्रदर्पणम् । कल्पतरुकारैः भगवदमलानन्दैर्विरचितम् । अतीव प्रौढोऽयं ग्रन्थः । २ ८

८. सूत्रमुक्तावलिः । ब्रह्मानन्दविरचिता ।
नातिचिराद्बहिरवतरिष्यति ।

९. वेदान्तसारः । श्रीसदानन्दविरचितः । आपदेवविरचितया टीकया संवलितः । आङ्गलभाषायां सुन्दररामार्येण विरचितया अतिविस्तृतया भूमिकया समेतः । कलिकोबद्धः स्वर्णाक्षरयुक्तश्च १ ८

१०. पूर्वोत्तरमीमांसावादनक्षत्रमाला । सुप्रसिद्धैः श्रीमदप्पयदीक्षितैः विरचिता । कलिकोबद्धा स्वर्णाक्षरयुक्ता च २ ०

११. योगसुधाकरो नाम योगसूत्रवृत्तिः । श्रीसदाशिवेन्द्रसरस्वतीविरचिता । संस्कृतभाषायां श्रीसदाशिवेन्द्राणामतिमानुषेण चरित्रेण संभूषिता । कलिकोबद्धा स्वर्णाक्षरसंयुक्ता च १ ८

१२. श्रीमद्भगवद्गीता । श्रीवेङ्कटनाथविरचितया ब्रह्मानन्दगिर्याख्यया व्याख्यया संभूषिता । इयं व्याख्या अत्यपूर्वा मनोरञ्जिका च । कलिकोबद्धा स्वर्णाक्षरसयुक्ता च ३ ०

१३. तैत्तिरीयोपनिषद्भाष्यम् । श्रीशंकरभगवत्पूज्यपादविरचितम् । श्री अच्युतकृष्णानन्दतीर्थविरचितया वनमालाख्यया व्याख्यया समेतम् । कलिकोबद्धं स्वर्णाक्षरयुक्तं च ३ ०

१४. विष्णुसहस्रनामभाष्यम् । श्रीशंकरभगवत्पूज्यपादविरचितम् । श्रीतारकब्रह्मानन्दविरचितया व्याख्यया समेतम् ।
नातिचिराद्बहिरवतरिष्यति ।

श्रीवाणीविलासमुद्राक्षरालयः
——— श्रीरङ्गम् ———